ता सत्यरण्यवासव्यसनेनोद्वेजिता भूयोभूयश्चास्माभिर्विबोध्यमाना प्रकृतावेव स्थास्यति' इति ।

( १० ) 'तथा' इति तस्याः प्रतियाते स्वजने सा गणिका तमृषिमलघुभक्तिर्धौतोद्गमनीयवासिनी नात्याहृतशरीरसंस्कारा वनतरुपोतालवालपूरणैर्देवतार्चनकुसुमोच्चयावचयप्रयासैर्नैकविकल्पोपहारकर्मभिः कामशासनार्थे च गन्धमाल्यधूपदीपनृत्यगीतवाद्यादिभिः क्रियाभिरेकान्ते च त्रिवर्गसंबन्धिनीभिः कथाभिरध्यात्मवादैश्चानुरूपैरल्पीयसैव कालेनान्वरञ्जयत् ।

---

अभ्यस्ता । अरण्यवासव्यसनेन वनवासजनितदुःखेन । उद्वेजिता व्याकुला । विबोध्यमाना उपदिश्यमाना । प्रकृतौ स्वभावे ।

( १० ) तथा—तथाऽस्तु इति कथयित्वा । प्रतियाते प्रतिनिवृत्ते । अलघुभक्तिः दृढभक्तिः । धौतेति—धौतं शुद्धं उद्‌गमनीयं उपस्थानयोग्यं वसनं वस्ते इति तद्वासिनी । उद्‌गमनीयं धौतवस्त्रयुगं वा । 'तस्मादुद्गमनीयं यद् धौतयोर्वस्त्रयोर्युगमि'त्यमरः । नात्याहृतेति—नात्याहृतः नाभिलषितः शरीरस्य संस्कारः परिकर्मादि यया सा । वनेति—वनतरुपोतानां वनस्थबालवृक्षाणामालवालस्य जलाधारवेष्टनस्य पूरणैर्जलेनेति शेषः । देवतेति—देवतानामर्चनार्थं यः कुसुमोच्चयः पुष्पराशिस्तस्यावचयः संग्रहस्तस्य प्रयासैः प्रयत्नैः । नैकेति—नैकेऽनेके विकल्पाः प्रकारा येषां तानि यान्युपहारकर्माणि बलिकर्माणि तैः । कामस्य शासनः कामशासनो महादेवस्तदर्थे तन्निमित्तम् । एकान्ते रहसि । त्रिवर्गसम्बन्धिनीभिः धर्मार्थकामविषयाभिः । अध्यात्मवादैः आत्मतत्त्वचिन्तनैः । अनुरूपैर्योग्यैः । अन्वरञ्जयत् । सन्तोषयामास मुनिमिति शेषः ।

---

वह सुकुमारी वनवासके क्लेशसे ऊब करके और हम लोगोंके बार-बार समझाने से प्रकृतिस्थ हो जायगी ।

( १० ) 'बहुत अच्छा' कह करके जब उस वेश्याके कुटुम्बी घर लौट गये, तब वह बड़ी श्रद्धाके साथ उन मुनिराजकी सेवा-शुश्रूषा करने लगी । वह धुले हुए केवल एक जोड़े कपड़े से अपना काम चलाती । शरीरको एक दम सँवारती-सिंगारती नहीं । तपोवनके छोटे-छोटे पौधोंके थालोंमें जल भरती । देवपूजनके निमित्त फूल जुटाती । विविध प्रकारके उपचार एकत्र करती । श्रीशिवजीके पूजनके निमित्त चन्दन, माला, धूप, दीपका जुगाड़ करती और नृत्य-गीत-वाद्य करके उन्हें प्रसन्न करती । कभी-कभी एकान्तमें अर्थ—धर्म—कामसे सम्बन्ध रखनेवाली अथवा अध्यात्मसे सम्बद्ध अनुरूप बातें करती थी । ऐसा करके उसने थोड़े ही समयमें उस मुनिका मन मोह लिया ।

( ११ ) एकदा च रहसि रक्तं तमुपलक्ष्य मूढः' खलु लोको यत्महर्धर्मेणार्थकामावपि गणयति'इति किंचिद्स्मयत । 'कथय वासु, केनांशेनार्थकामातिशायी धर्मस्तवाभिप्रेतः'इति प्रेरिता मरीचिना लज्जामन्थरमारभताभिधातुम्—'इतः किल जनाद्भगवतस्त्रिवर्गबलाबलज्ञानम् । अथवैतदपि प्रकारान्तरं दासजनानुग्रहस्य । भवतु, श्रूयताम् ।

( १२ ) ननु धर्मादृतेऽर्थकामयोरनुत्पत्तिरेव । तदनपेक्ष एव धर्मो निवृत्तिसुखप्रसूतिहेतुरात्मसमाधानमात्रसाध्यश्च । सोऽर्थकामवद्बाह्यसाध-

( ११ ) रक्तमनुरक्तम् । तम् मरीचिम् । मूढः अज्ञः । धर्मेण सहार्थकामावपि गणयति धर्मेण सहार्थकामयोर्गणना नोचितेति भावः । अस्मयत—स्मितमकरोत् । वासु बाले । सम्बोधनमेतत् । केनांशेन कया विधया । अर्थकामौ अतिशेते श्रेष्ठत्वेनोल्लंघ्य वर्त्तत इति तथा । अभिप्रेतः इष्टः । इति एवं प्रकारेण । प्रेरिता अनुयुक्ता पृष्टेति यावत् । लज्जामन्थरं सव्रीडमन्दम् । क्रियाविशेषणमिदम् । इतो जनात्—अस्मान्मल्लक्षणाजनात् । मत्त इति यावत् । भगवतस्तव । त्रिवर्गेति—त्रिवर्गस्य धर्मार्थकामानां बलाबलयोरुत्कर्षापकर्षयोर्ज्ञानम् । मादृशजनाद् भवादृशमहर्षेस्त्रिवर्गबलाबलज्ञानमसम्भवमेव । तथापि यद्भवता जिज्ञासितं तदपि मयि भवतोऽनुग्रहस्य चिह्नमिति भावः । भवतु—यथा वाऽस्तु ।

( १२ ) धर्मादृते—धर्मेण विना । अनुत्पत्तिरभावः । तदनपेक्षः अर्थकामनिरपेक्षः । निवृत्तिसुखप्रसूतिहेतुः निवृत्त्या यत् सुखं तस्य प्रसूतेरुत्पत्तेः हेतुः कारणम् मोक्षसुखनिदानम् । आत्मेति—आत्मनः स्वस्य समाधानमात्रेणैकाग्र्येण

( ११ ) एक दिन एकान्तमें मुनिको अपने पर आसक्त देख करके उस वेश्याने सोचा—'यह संसार कितना मूर्ख है कि, जो धर्मके साथ-साथ अर्थ और कामको भी गणना करता है ।' ऐसा विचार आने पर उसे कुछ विस्मय भी हुआ । इसी समय महर्षि मरीचिने कहा—'हे बाले ? अर्थ और कामसे भी बढ़ करके धर्मको तुमने क्यों करके माना ?' तब वह लज्जावश धीरे-धीरे बोली—'इस दासीकी अपेक्षा आपको त्रिवर्ग ( अर्थ-धर्म-काम ) का बलाबल ज्ञान अधिक है । अथवा यह भी अपने सेवकों पर कृपा करनेका एक प्रकारान्तर है । अच्छा सुनिए ।

( १२ ) धर्मके विना अर्थ और कामकी उत्पत्ति ही नहीं हो पाती । इसलिए कहा जा सकता है कि, धर्म काम और अर्थकी अपेक्षा नहीं करता, यह धर्म ही निवृत्ति सुखकी उत्पत्तिका मूल कारण है और चित्तकी एकाग्रता मात्रसे यह सिद्ध हो जाता है

नेषु नात्यायतते । तत्त्वदर्शनोपबृंहितश्च यथाकथंचिदप्यनुष्ठीयमानाभ्यां नार्थकामाभ्यां बाध्यते । बाधितोऽपि चाल्पायासप्रतिसमाहितस्तमपि दोषं निर्हृत्य श्रेयसेऽनल्पाय कल्पते ।

( १२ ) तथाहि पितामहस्य तिलोत्तमाभिलाषः, भवानीपतेर्मुनिपत्नीसहस्रसंदूषणम् , पद्मनाभस्य षोडशसहस्रान्तःपुरविहारः, प्रजापतेः स्वदुहितर्यपि प्रणयप्रवृत्तिः, शचीपतेरहल्याजारता, शशाङ्कस्य गुरुतल्पगमनम् , अंशुमालिनो वडवालङ्घनम् , अनिलस्य केसरिकलत्रसमागमः,

---

साध्यः सम्पाद्यः । सः धर्मः । बाह्यसाधनेषु लोकव्यवहारेषु । अत्यायतते आयत्तो भवतीत्यर्थः । तत्त्वदर्शनेन यथार्थविचारेण उपबृंहितो वर्द्धितो धर्मः कथंचिदपि—केनापि प्रकारेण । अनुष्ठीयमानाभ्यां सेव्यमानाभ्याम् । बाध्यते प्रतिहन्यते । अल्पायासेन स्वल्पप्रयत्नेन प्रतिसमाहितः समाधानं प्रापितः । निर्हृत्य दूरीकृत्य । अनल्पाय श्रेयसे मोक्षाय । कल्पते समर्थो भवति ।

( १२ ) तथाहि—यथा ब्रह्मादयो देवा अर्थकामाभ्यां प्रतिहतेऽपि धर्मे पुनरप्यल्पायासेन तं दोषं परिहृत्य निरतिशयसुखं लब्धवन्तस्तदेवोदाहरणमुखेन प्रदर्शयत इत्यर्थः । पितामहस्य ब्रह्मणः । तिलोत्तमा काचिदप्सराः । भवानीपतेः शिवस्य । संदूषणमुपभोगः । पद्मनाभस्य श्रीकृष्णस्य । अन्तःपुरं स्त्रीवर्गः । प्रजापतेः विधातुः । स्वदुहितरि निजकन्यायाम् । शचीपतेरिन्द्रस्य । शशाङ्कस्य चन्द्रस्य । गुरुतल्पगमनं बृहस्पतिपत्नीधर्षणम् । 'तल्पं शय्याट्टदारेष्वि'ति कोषः । अंशुमालिनः सूर्यस्य । वडवा अश्वी । अनिलस्य वायोः । केसरिकलत्रेति—केसरिणस्तन्नामकवानरस्य कलत्रं स्त्री अञ्जनी नाम्नी तया सह समागमः सङ्गमः ।

---

धर्म, अर्थ और कामकी तरह बाह्य साधनोंके अधीन नहीं रहता । तत्त्वज्ञानसे उत्कर्षको प्राप्त धर्म किसी भी तरह यदि अर्थ और कामका अनुष्ठान करनेपर भी उनसे बाधित हो भी जाय तो, यह तनिकसे प्रयाससे समाहित हो करके उस दोषको भी नष्ट करके विपुल श्रेयका कारण बन जाता है ।

( १२ ) और फिर पितामहका तिलोत्तमापर मोहित होना, शिवजीका हजारों मुनिपत्नियोंका धर्म बिगाड़ना, श्रीकृष्णका सोलह हजार स्त्रियोंके अन्तःपुरमें विहार करना, प्रजापतिका अपनी कन्यापर बुरी दृष्टि करना, इन्द्रका अहल्याके साथ दुराचार करना, चन्द्रमाका गुरुपत्नीको दूषित करना, सूर्यका वडवा ( घोड़ी ) का धर दबोचना, वायुका केसरी वन्दरकी पत्नीसे समागम करना, बृहस्पतिका उतथ्यकी पत्नीसे अभिसार करना,

बृहस्पतेरुतथ्यभार्याभिसरणम्, पराशरस्य दाशकन्यादूषणम्, पाराशर्यस्य भ्रातृदारसङ्गतिः अत्रेर्मृगीसमागम इति।

( १४ ) अमराणां च तेषु तेषु कार्येष्वासुरविप्रलम्भनानि ज्ञानबलान्न धर्मपीडामावहन्ति। धर्मपूते च मनसि नभसीव न जातु रजोऽनुषज्यते। तन्मन्ये नार्थकामौ धर्मस्य शततमीमपि कलां स्पृशतः इति।

( १५ ) श्रुत्वैतदृषिरुदीर्णरागवृत्तिरभ्यधात्—'अयि विलासिनि, साधु पश्यसि न धर्मस्तत्त्वदर्शिनां विषयोपभोगेनोपरुध्यत इति। किंतु जन्मनः

---

उतथ्यो नाम बृहस्पतेरग्रजः। पराशरस्य व्यासपितुः। दाशकन्या कैवर्तदुहिता योजनगन्धेति प्रसिद्धा। पाराशर्यस्य व्यासस्य। पराशरस्यापत्यं पुमानिति गर्गादिभ्यो यञ्। तस्य भ्राता विचित्रवीर्यस्तस्य दारेषु पत्नीषु संगतिः समागमः। अत्रेस्तदाख्यमहर्षेः।

( १४ ) अमराणां देवानाम्। आसुरविप्रलम्भनानि अकृत्याचरणानि। ज्ञानबलाद् ज्ञानोत्कर्षात्। धर्मपीडां धर्मबाधाम्। आवहन्ति जनयन्ति। नभसि आकाशे। जातु कदाचित्। रजो रजोगुणः धूलिश्च। अनुषज्यते सम्बध्यते। तन्मन्य इत्यादि—अर्थकामौ धर्मस्य शततमांशेनापि समानौ न भवितुमर्हत इति मां प्रतिभातीत्यर्थः।

( १५ ) एतत्–काममञ्जर्युक्तम्। ऋषिर्मरीचिः। उदीर्णा उद्रिक्ता वृद्धिं गतेति यावत्। रागवृत्तिरनुरागव्यापारः कामाभिलाष इति वा यस्यासौ। अभ्यधात् कथयामास। अयि विलासिनीति सम्बोधनेन स्वानुरागप्रकटनम्। साधु सम्यक्। पश्यसि विचारयसि। तत्त्वदर्शिनां तत्त्वसाक्षात्कारवताम्। उपरुध्यते क्षीयते। जन्मनः प्रभृति–आजन्म। अर्थकामवार्त्तानभिज्ञाः अर्थकामयोर्नामापि न जानीम इति

---

महर्षि पराशरका धीवरकी कन्याके साथ दुराचार करना, व्यासदेवका अपने भाईकी स्त्रियोंके साथ समागम करना और अत्रिभगवानका मृगीके साथ संभोग करना आदि।

( १४ ) इस प्रकार देवताओंके दुराचार भी ज्ञानबलसे युक्त पुरुषोंको नहीं सताते। धर्मसे पुनीत मनमें रजोगुणका समावेश उसी तरह नहीं हो पाता जैसे आकाशमें धूल नहीं रुकती। अत एव मेरा तो, विश्वास है कि, अर्थ और काम धर्मकी सौवीं कलाको भी नहीं पहुँच सकते।

( १५ ) इन बातोंको सुन करके मुनिराजकी इच्छाशक्ति प्रबल हो उठी और उन्होंने कहा–'ओ विलासिनि! तुम्हारा कथन यथार्थ है। यह सच है कि, तत्त्वज्ञानी पुरुषोंका धर्म विषय-भोगसे नष्ट नहीं होता। लेकिन, जन्मसे लेकर आजतक

प्रभृत्यर्थकामवार्तानभिज्ञा वयम् । ज्ञेयौ चेमौ किंरूपौ किंपरिवारौ किंफलौ च' इति ।

( १६ ) सा त्ववादीत्—'अर्थस्तावदर्जनवर्धनरक्षणात्मकः, कृषिपाशुपाल्यवाणिज्यसंधिविग्रहादिपरिवारः, तीर्थप्रतिपादनफलश्च । कामस्तु विषयातिसक्तचेतसोः स्त्रीपुंसयोर्निरतिशयसुखस्पर्शविशेषः । परिवारस्त्वस्य यावदिह रम्यमुज्ज्वलं च । फलं पुनः परमाह्लादनम् , परस्पर-

---

भावः । ज्ञेयौ-ज्ञातव्यौ । इमौ—अर्थकामौ । किंरूपौ कीदृशस्वरूपौ । किंपरिवारौ—अनयोरङ्गभूतानि कानीत्यर्थः । केन प्रकारेणेमौ साध्याविति भावः । किंफलौ—अनयोः परिणामः कीदृश इत्यर्थः ।

( १६ ) सा—काममञ्जरी । अर्जनेति—अर्जनमुपार्जनं सम्पादनमिति यावत् । वर्धनं उपचयः । रक्षणं चौरादिभ्यः पालनमेतत्स्वरूपोऽर्थ इति । कृषीति—कृषिः कर्षणं पाशुपाल्यं गवादिपशुपालनम् वाणिज्यं वणिक्कर्म क्रयविक्रयादि, सन्धिविग्रहौ राजनीत्युक्तौ एते परिवाराः परिकराः साधनानीति यावद् यस्य सः । तीर्थेति—तीर्थे सत्पात्रे प्रतिपादनं दानं फलं परिणामो यस्य सः । विषयेति—विषयेषु स्रक्चन्दनाद्युपभोग्यपदार्थेषु अतिसक्तम् अत्यन्तलग्नं चेतो मानसं ययोस्तथाविधयोः । स्त्री च पुमांश्चेति स्त्रीपुंसौ । 'अचतुर' इत्यादिना निपातनात् । निरतिशयेति—श्रेष्ठसुखसाक्षात्कारस्वरूपः आलिङ्गनादिरूप इत्यर्थः । अस्य कामस्य । यावत् साकल्येन । इह संसारे । रम्यं मनोहरमुज्ज्वलमुत्कृष्टञ्च । संसारे यावन्तो रमणीया उत्कृष्टाश्च पदार्थाः सन्ति सर्वं एव ते कामस्य परिवारा इति भावः । परमाह्लादनं उत्कृष्टानन्दजनकम् । परस्परविमर्दजन्म—अन्योन्यालिङ्गनादिजन्यम् ।

---

हमलोग अर्थ और कामकी बातोंसे अनभिज्ञ रहते आये हैं। इसलिए यह जानना आवश्यक है कि, इनका क्या स्वरूप है, इनके कौन-कौनसे परिवार हैं और इनका क्या फल है ?'

( १६ ) उस वेश्याने कहा—'अर्जन ( संचय ) वर्धन ( व्यापार आदिके द्वारा उसे बढ़ाना ) और उसे नष्ट होनेसे बचाना ही अर्थका तत्त्व है । कृषि ( खेती ), पशुपालन, व्यापार, सन्धि और विग्रह, ये ही अर्थके परिवार हैं। सत्पुरुषोंको दान देना ही अर्थका फल है । स्त्री-पुरुष वासनावश परस्पर अत्यन्त आसक्त चित्तसे जिसमें स्पर्श-सुखका अनुभव करते हैं, उसे काम कहते हैं । रमणीयता और उज्ज्वलता ही इसके परिवार हैं। इस कामका फल परमानन्द है। वह आनन्द स्त्री-पुरुषके

विमर्दजन्म, स्मर्यमाणमधुरम् , उदीरिताभिमानमनुत्तमम् , सुखमपरोक्षं स्वसंवेद्यमेव । तस्यैव कृते विशिष्टस्थानवर्तिनः कष्टानि तपांसि, महान्ति दानानि, दारुणानि युद्धानि, भीमानि समुद्रलङ्घनादीनि च नराः समाचरन्ति' इति ।

( १७ ) निशम्यैतन्नियतिबलान्नु तत्पाटवान्नु स्वबुद्धिमान्द्यान्नु स्वनियममनादृत्य तस्यामसौ प्रासजत् । सा सुदूरं मूढात्मानं च तं प्रवहणेन नीत्वा पुरमुदारशोभया राजवीथ्या स्वभवनमनैषीत् । अभूच्च घोषणा

---

स्मर्यमाणमपि मधुरं—यस्य स्मरणेऽपि माधुर्यं का कथा तस्य साक्षादनुभवे इति भावः । उदीरिताभिमानम्–उद्दीपिताहङ्कारम् । अनुत्तमं श्रेष्ठम् । न विद्यते उत्तमं यस्मात्तदिति विग्रहः । अपरोक्षं—प्रत्यक्षम् । स्वसंवेद्यं स्वयमेवानुभवनीयं नत्वन्यवाक्येनेति शेषः । सर्वमेतत् सुखमित्यस्य विशेषणम् । तस्यैव–सुखस्यैव । कृते निमित्तम् । विशिष्टस्थानवर्त्तिनः–प्रसिद्धतीर्थादिक्षेत्रवासिनः । नरा इत्यस्य विशेषणम् । दारुणानि भयानकानि । भीमानि भयंकराणि । समाचरन्ति–कुर्वन्ति ।

( १७ ) निशम्य–श्रुत्वा । एतत्–काममंजरीवाक्यम् । नियतिबलात्–दैवप्रभावात् । तत्पाटवात्–तस्याः काममंजर्याः पाटवाच्चातुर्यात् । स्वस्य मरीचेरित्यर्थः । बुद्धिमान्द्यात्–मतिदौर्बल्यात् । सर्वत्र नु वितर्के । स्वनियमं–मुनिजनोचित–तपश्चरणादिकम् । अनादृत्य–परित्यज्य । तस्यां गणिकायाम् । असौ–मरीचिः । प्रासजत् आसक्तोऽभवत् । सा–काममञ्जरी अनैषीदित्यस्य कर्तृपदम् । सुदूरं अतिदूरवर्त्ति । पुरमित्यस्य विशेषणम् । मूढात्मानं–मुग्धचित्तम् । तं–मरीचिम् । प्रवहणेन यानविशेषेण । नीत्वेत्यस्य दुहादित्वात् तं पुरञ्चेति कर्मद्वयम् । उदारशोभया–प्रशस्तसौन्दर्यशालिन्या । राजवीथ्या–राजमार्गेण । स्वभवनं काममंजरी-

---

परस्पर आलिंगन-चुम्बन आदिसे उत्पन्न होता है। स्मरण करने में यह बड़ा ही मधुर लगता है। यह अभिमानको प्रोत्साहन देता है और आनन्दसे उत्तम वस्तु और कोई है ही नहीं। यह प्रत्यक्ष सुख अनुभवगम्य है। इसीके निमित्त स्थान विशेष में रहनेवाले लोग तरह-तरहके कष्ट सहते, तप करते, बड़े बड़े दान देते, भयानक युद्ध करते और विकराल समुद्र लाँघने आदिका दुष्कर कर्म करते हैं।

( १७ ) उसके ये वचन सुन करके दैवबलसे, उस वेश्याके कौशलसे अथवा बुद्धि मन्द पड़ जानेके कारण उन मुनिराजने अपने नियमोंको त्याग दिया और काममंजरीमें आसक्त हो गये। तदनन्तर उन मूढात्मा मुनिको कर्णीरथपर बिठा करके उत्कृष्ट शोभा-सम्पन्न राजवीथीसे चल करके अपने नगरके भवनमें ले गयी उसी दिन राजदरबारमें

'श्वः कामोत्सवः' इति । उत्तरेद्युः स्नातानुलिप्तमारचितमञ्जुमालमारब्ध-कामिजनवृत्तं निवृत्तस्ववृत्ताभिलाषं क्षणमात्रे गतेऽपि तया विना दूय-मानं तमृद्धिमता राजमार्गेणोत्सवसमाजं नीत्वा क्वचिदुपवनोद्देशे युवति-जनशतपरिवृतस्य राज्ञः संनिधौ समासदत् स्मितमुखेन तेन 'भद्रे भग-वता सह निषीद' इत्यादिष्टा सविभ्रमं कृतप्रणामा सस्मितं न्यषीदत् ।

( १८ ) तत्र काचिदुत्थाय बद्धाञ्जलिरुत्तमाङ्गना 'देव, जितानया-हम् । अस्यै दास्यमद्यप्रभृत्यभ्युपेतं मया' इति प्रभुं प्राणंसीत् । विस्मय-

गृहम् । घोषणा डिण्डिमादिना प्रचारः । श्वः—आगामिदिने । उत्तरेद्युः—परदिने । स्नातानुलिप्तं आदौ स्नातः पश्चादनुलिप्तस्तम् । स्नानानन्तरं चन्दनादिना लिप्तसर्वाङ्गमित्यर्थः । आरचिता परिहिता मञ्जुर्मनोहरा माला येन तम् । आरब्धं प्रक्रान्तं कामिजनस्य विलासिनो वृत्तमाचरणं येन । कामुकवद्व्यवहरन्तमित्यर्थः । निवृत्तोऽपगतः स्ववृत्तस्य निजाचारस्य तपोनुष्ठानरूपस्याभिलाषो यस्य तम् । क्षणमात्रे मुहूर्त्तमात्रे । तया काममञ्जर्या । दूयमानं—दुःखमनुभवन्तम् । तस्या दर्शनं विना क्षणमात्रमपि स्थातुमपारयन्तमित्यर्थः । एतानि तमित्यस्य विशेषणानि । तं मरीचिम् । ऋद्धिमता—समृद्धेन । उत्सवसमाजं क्रीडासभाम् । युवतिजनेति—तरुणगणिकागणवेष्टितस्य । राज्ञः—चम्पापतेः सिंहवर्मणः । समासदत् आगतवती । तेन राज्ञा । भगवता मुनिना । निषीद—उपविश । आदिष्टा अनुमता । सविभ्रमं—सविलासम् ।

( १८ ) तत्र उत्सवसमाजे । काचिद् अनिर्दिष्टनाम्नी । देव–राजन् । अनया-काममञ्जर्या । अस्यै–एतदर्थम् । काममञ्जर्या इत्यर्थः । दास्यं—दासीत्वम् । अभ्यु-

घोषणा हुई कि, कल कामोत्सव मनाया जायगा ।' दूसरे दिन महर्षि मरीचिने स्नान करके सुगन्धित तेल लगाया । सुन्दर माला पहनी । इस तरह कामी पुरुषों जैसा बानक बनाया । उस समय वे अपने पूर्ववृत्त ( ऋषिजीवन ) को एकदम भूल गये । क्षणमात्रके लिए भी काममंजरीका वियोग होनेसे वे विह्वल हो उठते थे । इसी समय वह वेश्या समृद्धिसम्पन्न राजमार्ग से चल करके उनको, सैकड़ों युवतियोंसे आवेष्टित महाराजके पास किसी उपवनमें विद्यमान, राजदरबारमें ले गयी । राजा काममंजरीको देख करके मुसकराये और उन्होंने कहा—'भद्रे ! भगवान् मरीचिके साथ बैठो' महाराजकी यह आज्ञा पा करके उसने भावभंगीके साथ प्रणाम किया और मन्द-मन्द मुसकाती हुई बैठ गयी ।

( १८ ) इसी समय एक उत्तम श्रेणीकी स्त्री हाथ-जोड़ करके उठ खड़ी हुई और बोली—'देव ! इसने मुझे जीत लिया । आजसे मैं इसकी दासी हो गयी ।' यह कह

हर्षमूलश्च कोलाहलो लोकस्योदजिहीत । हृष्टेन च राज्ञा महार्हैं रत्नालंकारैर्महता च परिबर्हेणानुगृह्य विसृष्टा वारमुख्याभिः पौरमुख्यैश्च गणशः प्रशस्यमाना स्वभवनमगत्वैव तमृषिमभाषत- –'भगवन् , अयमञ्जलिः, चिरमनुगृहीतोऽयं दासजनः, स्वार्थ इदानीमनुष्ठेयः' इति ।

(१६) स तु रागादशनिहत इवोद्भ्राम्याब्रवीत्–'प्रिये, किमेतत् । कुत इदमौदासीन्यम् । क गतस्तव मय्यसाधारणोऽनुरागः' इति । अथ सा सस्मितमवादीत्—भगवन् , ययाद्य राजकुले मत्तः पराजयोऽभ्युपेत-

पेतम्–अङ्गीकृतम् । प्रभुं–राजानम् । प्राणंसीत्–प्रणनाम । विस्मयेति–विस्मयश्चमत्कारो हर्ष आनन्दश्चेति विस्मयहर्षौ मूलं यस्य स तथा । लोकस्य–तत्रस्थजनसमूहस्य । उदजिहीत–उत्थितोऽभवत् । ओहाङ्गताविरयस्य लङि रूपम् । महार्हैः बहुमूल्यैः । परिबर्हेण राजोचितपरिच्छदेन, हस्त्यश्वादिभिरित्यर्थः । अनुगृह्य–परितोष्य काममञ्जरीमिति शेषः । विसृष्टा–गमनायानुज्ञाता । वारमुख्याभिः–श्रेष्ठवाराङ्गनाभिः । पौरमुख्यैः नागरिकप्रधानैः । गणशः–संघशः । प्रशस्यमाना अभिनन्द्यमाना काममञ्जरीति शेषः । अयमञ्जलिः–प्रणमामीति भावः । अयं दासजनः—अहमित्यर्थः । स्वार्थः–स्वकीयप्रयोजनम् अनुष्ठेयः–अनुष्ठीयताम् ।

(१९) स महर्षिः । रागाद् अनुरागात् । अशनिहतो वज्राहतः । उद्भ्रम्य उद्भ्रान्तो भूत्वा । कुतः—कस्माद्धेतोः । औदासीन्यं–विरागः । सा काममञ्जरी । यया–गणिकया । राजकुले–राजसकाशे । मत्तः मम सकाशात् । संघर्षे–विवादे । आवर्जितवतीव–वशीकृतवतीव । श्लाघसे–स्वगौरवं प्रकटयसि । अधिक्षिप्ता–तिरस्कृता । दास्यमेव पणस्तस्य बन्धो दृढनियमस्तेन । यद्यहं मरीचिमावर्जयितुं समर्था तदा त्वं मे दासी भविष्यसि, अन्यथाऽहं तव दासी भविष्यामीति पणस्य

करके उसने राजाको प्रणाम किया । इसपर राज-दरबारमें आश्चर्य और हर्षभरा कोलाहल होने लगा । महाराजने प्रसन्न हो करके वेशकीमती रत्नजटित अलङ्कार, अच्छे-अच्छे वस्त्र दे करके काममंजरीको विदा किया । तब झुण्डके झुण्ड वेश्याओं और पुरवासियोंने उसकी प्रशंसा की । अपने घर पहुंचनेके पहले ही काममंजरीने मरीचि से कहा–'भगवन् ! मैं हाथ जोड़ती हूं । आपने इस दासीपर बड़ी कृपा की । अब जा करके अपना काम करिये ।'

(१९) प्रेमातिरेकके कारण अपनी प्रियाके कठोर वचन सुन करके महर्षि इस तरह तिलमिला उठे जैसे उन पर वज्र गिर पड़ा हो । उन्होंने कहा 'प्रिये ! यह क्या ? ऐसी उदासीनता तुममें क्यों आ गयी ? मुझपर तुम्हारा जो असाधारण अनुराग था, वह कहाँ

स्तस्याश्च मम च कस्मिंश्चित्संघर्षे 'मरीचिमावर्जितवतीव श्लाघसे' इति तयास्म्यहमधिक्षिप्ता । दास्यपणबन्धेन चास्मिन्नर्थे प्रावर्तिषि । सिद्धार्था चास्मि त्वत्प्रसादात्' इति । स तया तथावधूतो दुर्मतिः कृतानुशयः शून्यवन्न्यवर्तिष्ट । यस्तथैवं कृतस्तपस्वी तमेव मां महाभाग, मन्यस्व । स्वशक्तिनिषिक्तं रागमुद्धृत्य तयैव बन्धक्या महद्वैराग्यमर्पितम् । अचिरादेव शक्य आत्मा त्वदर्थसाधनक्षमः कर्तुम् । अस्यामेव तावदङ्गपुर्यां चम्पायाम्' इति ।

( २० ) अथ तन्मनश्च्युततमःस्पर्शभियेवास्तं रविरगात् । ऋषिमु-

---

स्वरूपम् । अर्थे—विषये—भवदावर्जनरूपे इत्यर्थः । प्रावर्तिषि—प्रवृत्ता । सिद्धार्था—कृतकृत्या । सः—मरीचिः । तया—काममञ्जर्या । तथा—तेन प्रकारेण अवधूतः—तिरस्कृतः । कृतानुशयः—कथमहमनया वञ्चित इति कृतपश्चात्तापः । शून्यवत्—शून्यहृदय इव । न्यवर्तिष्ट—स्वस्थानं प्रति परावृत्तोऽभवत् । यस्तपस्वी—अहमित्यर्थः । तया—काममञ्जर्या । एवं कृतः—पापे निमज्जितः तमेव—मरीचिमेव । मन्यस्व—जानीहि । महाभागेति सम्बोधनमपहारवर्मणः । स्वशक्तिनिषिक्त—निजसामर्थ्यनिःक्षिप्तम्—काममञ्जर्या स्वयमेव जनितमित्यर्थः । रागम्-अनुरागम् । उद्धृत्य—उत्पाट्य । बन्धक्या—कुलटया । महद्वैराग्यमर्पितं—रागस्थाने वैराग्यं स्थापितम् । त्वदर्थेति । तवापहारवर्मणोऽर्थस्य प्रयोजनस्य सुहृद्गतिनिर्णयरूपस्य साधने सम्पादने क्षमः समर्थः । अल्पेनैव कालेन पुनरहं पूर्वशक्तिसम्पन्नो भविष्यामीत्यर्थः । वस—तिष्ठ प्रतिपालयेति यावत् ।

( २० ) अथेति—तस्य मरीचेर्मनसो मानसाच्च्युतं गलितं यत्तमोऽज्ञानरूपं

---

चला गया ?' तब उसने मुसकाकर कहा—'भगवन् ! जिस स्त्रीने राजदरबारमें अपनी पराजय मानी है, उसके साथ किसी समय मेरा संघर्ष हो गया। उस समय उसने ताना दे करके कहा था—'ओ हो ! तुम तो, इतनी हेकड़ी दिखाती हो, मानो तुमने महर्षि मरीचिको मोहित कर लिया है ।' अन्तमें जब उसने मेरी दासी होनेकी शर्त मान ली, तब मैं इस काम—( आपको मोहित करनेके काम ) में प्रवृत्त हुई। और आपकी कृपासे मनोरथ भी सिद्ध हो गया ।' उसके द्वारा इस प्रकार तिरस्कृत हो करके दुर्गति मरीचि बहुत पछताये और शून्य मनसे आश्रमपर लौट आये। इस तरह जिस तपस्वीकी छीछालेदर हुई थी, हे महाभाग ! वह मैं ही हूँ । उस कुलटाने अपने अर्पित अनुरागको दूर करके मुझे असाधारण वैराग्य प्रदान किया है । शीघ्र ही मेरी आत्मा आपका कार्यसाधन करनेको समर्थ हो जायगी । तबतक आप इसी अङ्गपुरीमें निवास करिये।

( २० ) इसी समय जैसे उस तपस्वीके मनसे निःसृत अज्ञानान्धकारके स्पर्शभयसे

क्तश्च रागः संध्यात्वेनास्फुरत् । तत्कथादत्तवैराग्याणीव कमलवनानि समकुचन् । अनुमतमुनिशासनस्त्वहममुनैव सहोपास्य संध्यामनुरूपाभिः कथाभिस्तमनुशय्य नीतरात्रिः प्रत्युन्मिषत्युदयप्रस्थदावकल्पे कल्पद्रुमकिसलयावधीरिण्यरुणार्चिषि तं नमस्कृत्य नगरायोदचलम् ।

( २१ ) अदर्शं च मार्गाभ्याशवर्तिनः कस्यापि क्षपणकविहारस्य बहिर्विविक्ते रक्ताशोकखण्डे निषण्णमस्पृष्टसमाधिमाधिक्षीणमग्रगण्यमन-

---

तस्य स्पर्शभिया संपर्कभयेनेवेत्युत्प्रेक्षा । रवितमसोर्वैरं प्रसिद्धमेव । ऋषिणा मरीचिना मुक्तस्त्यक्तो रागो गणिकाविषयकः सन्ध्यात्वेन सन्ध्यारूपेणास्फुरत प्रकटीबभूव । तत्कथेति—तस्य मरीचेः कथया वार्त्तया दत्तं वैराग्यं येभ्यस्तानि । समकुचन्—संकुचितानि बभूवुः । कमलवनानां संकोचे तत्कथादत्तवैराग्यमेव कारणत्वेनोत्प्रेक्षितम् । अनुमतमङ्गीकृतं मुनेर्मरीचेः शासनमादेशो येन स तथा । अमुना—मुनिना । अनुरूपाभिः तत्कालयोग्याभिः । तमनुशय्य तेन मुनिना सह शयित्वा । नीतरात्रिः—यापितनिशः । प्रत्युन्मिषति—प्रकाशमाने । उदयति सतीत्यर्थः । उदयेति—उदयः उदयपर्वतस्तस्य प्रस्थः—सानु तस्मिन् । दावकल्पे वनाग्निसदृशे । कल्पद्रुमेति—कल्पद्रुमस्य कल्पवृक्षस्य किसलयानि पल्लवानि अवधीरयति तिरस्करोतीति तस्मिन् । कल्पद्रुमपल्लवापेक्षयाधिकरक्तवर्णे इत्यर्थः । अरुणार्चिषि—अरुणा रक्तवर्णा अर्चिषो यस्य तस्मिन्—सूर्ये इत्यर्थः । तं—मुनिं नगराय नगरं गन्तुम् । उदचलं प्रस्थितोऽभवम् ।

(२१) मार्गाभ्यासवर्त्तिनः—पथि पार्श्वस्थितस्य । क्षपणकविहारस्य—बौद्धमन्दिरस्य । विविक्ते—निर्जने पवित्रे वा । रक्ताशोकखण्डे—रक्तवर्णाशोकतरुकदम्बे । निषण्णमुपविष्टम् । अस्पृष्टेति—अस्पृष्टोऽलब्धः समाधिर्योगो येन तं ध्यानशून्य-

---

सूर्य भगवान अस्त हो गये । उन्हीं महर्षिसे परित्यक्त अनुराग संध्याके रूपमें परिणत हो गया । उनकी बातोंसे जैसे वैराग्य प्राप्त करके कमलवन संकुचित हो गया । तदनन्तर उन्हीं मुनिराजकी अनुमतिसे मैंने उनके साथ संध्या की । रातको उनके साथ ही सोया और तरह-तरहकी बातें करते हुए वह रात बितायी । सबेरे जब दावानलके सदृश तथा कल्पवृक्षकी कोंपलों को नीचा दिखाने वाली अरुण किरणें उदयाचलपर उदित हुईं, तब मैंने उनको प्रणाम किया और नगरकी ओर चल पड़ा ।

( २१ ) एक स्थानपर मैंने मार्गके किनारे ही विद्यमान बौद्ध विहारके बाहर रक्त अशोक वनमें बैठे नियमहीन, मानसी पीड़ासे दुर्बल, कुरूप पुरुषोंके अग्रणी एवं अतिदीन

भिरूपाणां कृपणवर्णं कमपि क्षपणकम् । उरसि चास्य शिथिलितमलनिचयान्मुखान्निपततोऽश्रुबिन्दूनलक्षयम् । अप्राक्षं चान्तिकोपविष्टः—'क तपः, क च रुदितम् । न चेद्रहस्यमिच्छामि श्रोतुं शोकहेतुम्' इति ।

( २२ ) सोऽब्रूत—'सौम्य, श्रूयताम् । अहमस्यामेव चम्पायां निधिपालितनाम्नः श्रेष्ठिनो ज्येष्ठसूनुर्वसुपालितो नाम । वैरूप्यान्मम विरूपक इति प्रसिद्धिरासीत् । अन्यश्चात्र सुन्दरक इति यथार्थनामा कलागुणैः

---

मित्यर्थः । आधिक्षीणं मनोव्यथाभिः कृशम् । अग्रगण्यं श्रेष्ठम् । अनभिरूपाणां कुरूपाणाम् । कृपणवर्णं दीनवर्णं विषण्णमिति यावत् । उरसि—वक्षसि । अस्य—क्षपणकस्य । शिथिलितेति शिथिलितो धारापातेन विस्रंसितो मलनिचयो [illegible] राशिर्यैस्तानिति अश्रुबिन्दुविशेषणम् । शिथिलितो मलनिचयो यत्र तस्मा[illegible] विग्रहे तु मुखादित्यस्य विशेषणमपि भवितुमर्हति न तन्मनोरमम् । अलक्ष[illegible] अपश्यम् । अप्राक्षम्—पृष्टवानस्मि । क्व तप इति—अत्र क द्वयं तपोरुदितयोरस[illegible]मानाधिकरण्यं सूचयति । रहस्यं—गोप्यम् । शोकहेतुं—शोकनिदानम् ।

( २२ ) स क्षपणकः । श्रेष्ठिनः—वणिक्प्रधानस्य । ज्येष्ठसूनुः, ज्येष्ठपुत्रः । वैरूप्यात्—कुत्सितरूपवत्त्वाद्धेतोः । अत्र—चम्पायाम् । यथार्थेति—यथार्थं सार्थकं नाम यस्यासौ । नामानुरूपं सौन्दर्यमप्यासीदिति भावः । कलागुणैः—शिल्पमाहात्म्यैः । समृद्धः—पुष्टः । वसुना धनेन । नातिपुष्टः, साधारणः । धनस्य प्राचुर्यं नासीदिति भावः । तस्य सुन्दरकस्य । वपुर्वसुनी—आकृतिधने । निमित्तीकृत्य—कारणीकृत्य । पौरधूर्त्तैर्यद्वैरमुत्पादितं तत्र सुन्दरकस्य शारीरसौन्दर्यं मम धनं च कारणमासीदित्यर्थः । वैरोपजीविभिः—ये खलु द्वयोः परस्परं वैरमुत्पाद्य जीविकां निर्वाहयन्ति ते वैरोपजीविनस्तैः । पौरधूर्त्तैः नागरिकवञ्चकैः । उदपाद्यत—उत्पादितम् । ते एव—पौरधूर्त्ता एव । आवयोः सुन्दरकस्य मम च । स्वयमुत्पादितं—

---

वर्ण एक बौद्ध भिक्षुको देखा । और उसकी छातीपर गिरते हुए उन आँसुओंको भी देखा जो उसके मुखकी मैल धो रहे थे । मैं उसके समीप जा बैठा और पूछा—'भगवन् ! कहाँ तपस्या और कहाँ रोदन । यदि कोई छिपानेकी बात न हो तो, मैं आपके शोकका कारण जानना चाहता हूँ ।'

( २२ ) उसने कहा—'हे सौम्य ! सुनिये—मैं इसी चम्पानगरीके निवासी निधिपालित नाम सेठका बड़ा बेटा वसुपालित हूँ । मैं कुरूप हूँ, इस कारण 'विरूपक' इस नामसे प्रसिद्ध था । मेरा दूसरा भाई 'सुन्दरक' नामका था । उसका यह नाम उसके अनुरूप था ।

समृद्धो वसुना नातिपुष्टोऽभवत् । तस्य च मम च वपुर्वसुनी निमित्ती-कृत्य वैरं वैरोपजीविभिः पौरधूर्तैरुदपाद्यत । त एव कदाचिदावयोरुत्सव-समाजे स्वयमुत्पादितमन्योन्यावमानमूलमधिक्षेपवचनव्यतिकरमुपश-मय्य 'न वपुर्वसु वा पुंस्त्वमूलम्, अपि तु प्रकृष्टगणिकाप्रार्थ्ययौवनो हि यः स पुमान् । अतो युवतिललामभूता काममञ्जरी यं वा कामयते स हरतु सुभगपताकाम्' इति व्यवास्थापयन् ।

( २३ ) अभ्युपेत्यावां प्राहिणुव तस्यै दूतान् । अहमेव किलामुष्याः स्मरोन्मादहेतुरासम् । आसीनयोश्चावयोर्मामेवोपगम्य सा नीलोत्पलमयमिथा-

---

पौरधूर्तैरेव प्रारब्धम् । अन्योन्येति—अन्योन्यस्य परस्परस्यावमानोऽवज्ञैव मूलं निदानं यस्य तमिति अधिक्षेपवचनव्यतिकरमित्यस्य विशेषणम् । अधिक्षेपवचन-व्यतिकरं—तिरस्कारसूचकवाक्यप्रपञ्चम् । उत्तरोत्तरवर्धमानमिति शेषः । उपशमय्य—शमयित्वा । न वपुरिति—शरीरेण धनेन वा पुरुषः पुरुषपदवाच्यो न भवति किन्तु यः श्रेष्ठगणिकाभिः प्रार्थनीयो भवति स एव पुरुष इति भावः । युवतिललाम-भूता—तरुणीकुलालंकारस्वरूपा । सुभगपताकां—सौभाग्यचिह्नम् । हरतु—प्राप्नोतु । व्यवास्थापयन्—निर्णीतवन्तः ।

( २३ ) अभ्युपेत्य स्वीकृत्य तन्निर्णयमिति शेषः । आवां—सुन्दरकोऽहञ्च । प्राहिणुव—प्रेषितवन्तौ । तस्यै—काममञ्जर्यै तदर्थमित्यर्थः । अमुष्याः—काममञ्जर्याः । स्मरोन्मादहेतुः—स्मरेण कामेन य उन्मादः पारवश्यं तत्र हेतुर्निमित्तभूतः, रूपव-न्तमपि सुन्दरकं विहाय धनिकतया मामेव स्वीकृतवतीति भावः । आसीनयोः—

---

क्योंकि, उसमें सभी कलाओं और गुणों का समावेश था । हाँ, धन उसके पास उतना अधिक नहीं था, सो नगरके वैरोपजीवी धूर्तोंने उसके सौन्दर्य और धनकी आड़में वैर खड़ा कर दिया । उन्हीं लोगों ने किसी उत्सवके अवसर पर स्वयं उत्पन्न परस्पर अपमान के कारणस्वरूप तिरस्कारका उपशमन करके व्यवस्था दी 'केवल सौन्दर्य अथवा धन ही मनुष्य के पुंस्त्वका कारण नहीं हो सकता । सच्चा पुरुष तो वही हो सकता है जिसको कोई उत्तम वेश्या चाहे । इसलिए युवतियोंकी मुकुटमणिस्वरूपा काममञ्जरी तुम दोनोंमेंसे जिसे पसन्द करे, वही सौभाग्यशाली माना जाय ।' इसे अङ्गीकार करके हम दोनोंने उसके पास दूत भेजे ।

( २३ ) अन्तमें उस सुन्दरी काममञ्जरीने मुझको ही अपना प्रेमी चुना । जब हम दोनों एक साथ बैठे हुए थे, तब वह आयी और दोनोंमेंसे मुझपर ही अपने नीलकमलमय

पाङ्गदामाङ्गे नम मुञ्चन्ती तं जनमपत्रपयाधोमुखं व्यधत्त । सुभगंमन्येन च मया स्वधनस्य स्वगृहस्य स्वगणस्य स्वदेहस्य स्वजीवितस्य च सैवेश्वरी कृता । कृतश्चाहमनया मलमल्लकशेषः । हृतसर्वस्वतया चापवाहितः प्रपद्य लोकोपहासलक्ष्यतामक्षमश्च सोढुं धिक्कृतानि पौरवृद्धानामिह जैनायतने मुनिनैकेनोपदिष्टमोक्षवर्त्मा सुकर एव वेषो वेशनिर्गतानामित्युदीर्णवैराग्यस्तदपि कौपीनमजहाम् ।

(२४) अथ पुनः प्रकीर्णमलपङ्कः प्रबलकेशलुञ्चनव्यथः प्रकृष्टतमक्षुत्पि-

---

उत्सवसमाजे समुपविष्टयोः । उपगम्य-वल्लभत्वेनाङ्गीकृत्य । सा-काममञ्जरी । नीलोत्पलमयमिव-नीलकमलरचितमिव । अपाङ्गदाम-कटाक्षपरम्पराम् । मुञ्चन्ती-विसृजन्ती । तं-सुन्दरकम् । अपत्रपया-लज्जया । व्यधत्त-कृतवती । आत्मानं-सुभगं सौभाग्यवन्तं मन्यत इति सुभगम्मन्यस्तेन । स्वगणस्य-स्वजनवर्गस्य । सैव-काममञ्जर्येव । ईश्वरी-स्वामिनी । अनया-काममञ्जर्या । मलमल्लकशेषः-कौपीनमात्रावलम्बनः । 'कौपीनं मलमल्लकमि'ति वैजयन्ती । अपवाहितः-गृहान्निष्काशितः । प्रपद्य-प्राप्य । लोकोपहासलक्ष्यतां-जनानामुपहासविषयताम् । पौरवृद्धानां-नागरिकश्रेष्ठानाम् । जैनायतने-सौगतमन्दिरे । एकेन-केनचित् । उपदिष्टेति-उपदिष्टं प्रदर्शितं मोक्षस्यापवर्गस्य वर्त्म मार्गो यस्मै तथाभूतः । सुकरः-सुसाध्यः । वेशनिर्गतानां-वेश्यागृहनिष्क्रान्तानाम् । उदीर्णवैराग्यः-समुद्दीपितवैराग्यः अजहाम्-अत्यजम् ।

( २४ ) अथ-कौपीनत्यागानन्तरम् । प्रकीर्णेति—प्रकीर्णः प्रसृतो व्याप्त इति

---

नेत्रोंके कटाक्ष फेंकती हुई मेरे प्रतिद्वन्द्वीका मुख लाज के मारे नीचा कर दिया । अब मैंने अपने को सुन्दर मान करके काममंजरी को ही अपने धन, अपने घर, अपने गण और अपने जीवनतक की अधीश्वरी बना दिया । और उसने भी सर्वस्व हड़प करके मुझे कौपीन.वशेष कर दिया । कुछ शेष न रहनेपर उसने मुझे घरसे निकाल दिया । संसारके लोगोंने मुझे उपहासका लक्ष्य बनाया और जब नगरके बड़े-बूढ़ोंके धिक्कार भरे वचन सहनेमें मैं असमर्थ हो गया तब इस जैनमठमें भाग आया । यहाँ एक मुनिने मुझे मोक्षमार्गका उपदेश दिया । अब तो, मेरा यह दृढ़ विश्वास हो गया है कि, वेश्याओंद्वारा तिरस्कृत पुरुषोंके लिए यह ( निर्ग्रंथ ) वेश ही अच्छा है । इसी वास्ते मैंने कौपीनतक त्याग दी है ।

( २४ ) कुछ समय बाद जब मेरे शरीरमें बहुत-सा मैल जम गया, केशों में लटें बँध

पासादिदुःखः स्थानासनशयनभोजनेष्वपि द्विप इव नवग्रहो बलवतीभिर्यन्त्रणाभिरुद्वेजितः प्रत्यवामृशम्। अहमस्मि द्विजातिः। अस्वधर्मो ममैष पाषण्डपथावतारः। श्रुतिस्मृतिविहितेनैव वर्त्मना मम पूर्वजाः प्रावर्तन्त। मम तु मन्दभाग्यस्य निन्द्यवेषममन्ददुःखायतनं हरिहरहिरण्यगर्भादिदेवतापवादश्रवणनैरन्तर्यात्प्रेत्यापि निरयफलम् अफलं विप्रलम्भप्रायमी-

---

यावत्, मलपङ्कः सान्द्रीभूतरजःसमूहो यत्र सः। बौद्धानां देहमार्जननिषेधात् सर्वशरीरव्याप्तमल इत्यर्थः। प्रबलेति-प्रबला अत्यधिका केशानां लुञ्चनेनोत्पाटनेन व्यथा पीडा यस्य स तथा। बौद्धानां लुञ्चनमपि प्रसिद्धम्। प्रकृष्टेति-प्रकृष्टतमं अतिप्रबलं क्षुत्पिपासादिभिर्दुःखं यस्य सः। स्थानमवस्थानं, आसनमुपवेशनं, शयनं निद्रा, भोजनमशनमित्यादिकार्येषु। द्विपो-हस्ती। नवग्रहः-नवो नूतनो ग्रहो ग्रहणं यस्य सः। अचिरगृहीत इत्यर्थः। यन्त्रणाभिः-पीडाभिः। अचिरगृहीतो हस्ती यथा शयनभोजनादिष्वपि नितरां दुःखमनुभवति तथाहमपीति भावः। प्रत्यवामृशम्-अचिन्तयम्। द्विजातिर्वैश्यः। अस्वधर्मः-स्वधर्मो नेत्यर्थः। पाषण्डेति-पाषण्डानां वैदिकाचारभ्रष्टानां पन्थाः इति पाषण्डपथस्तत्र अवतारोऽवतरणम्-बौद्धमार्गानुसरणम्। पूर्वजाः-पितृपितामहादयः। प्रावर्त्तन्त-प्रवृत्ता अभूवन्। निन्द्यो गर्हणीयो वेषो यस्य तम्। अमन्दस्य महतो दुःखस्य-क्लेशस्यायतनं स्थानम्। हरिहरेति-हरिहरौ विष्णुशंकरौ हिरण्यगर्भो ब्रह्मा-तदादिदेवतानामपवादो निन्दा तस्य श्रवणस्य नैरन्तर्यं तस्मात्। अनवरतनिन्दाश्रवणात्। प्रेत्य-जन्मान्तरे। निरयफलं-नरकपरिणामकम्। अफलं-निष्फलं अत एव विप्रलम्भप्रायं प्रायेण वञ्चनात्मकम् एतावद् विशेषणं अधर्मवर्त्मेत्यस्य। इदं-मत्स्वीकृतम् अधर्मवर्त्म-बौद्धमतानुसरणरूपम्। धर्मवत्-धर्मेण तुल्यम्। समाचरणीयं-सेव्यमाश्रयणीयमिति यावत्। प्रत्याकलितेति-प्रत्याकलितश्चिन्तितः

---

जानेके कारण पीड़ा होने लगी, अत्यन्त भूख-प्याससे असह्य वेदना हुई और खड़े होने, बैठने, सोने तथा भोजनमें भी नये पकड़े हुए हाथीकी भाँति बलवती यन्त्रणाओंसे ऊब उठा, तब मैंने सोचा-मैं द्विज ( वैश्य ) हूँ। मेरा इस तरह पाषण्डपथपर आना भी स्वधर्मका त्याग ही है। मेरे पूर्वज श्रुति और स्मृतिविहित धर्मपथपर ही चले थे लेकिन मुझ अभागेने इस निन्द्य वेष और अतिशय दुखदायी जीवनको अपनाया है। विष्णु, शिव और ब्रह्मा आदि देवताओंके अपवाद निरन्तर सुनते रहनेके कारण यद्यपि मुझे नरकफल प्राप्त हुआ है, फिर भी इस असार और जुआचोरीसे भरे अधर्म-मार्गको मैंने धर्मकी भाँति मान रखा

दृशमिदमधमवर्म धर्मवत्समाचरणीयमासीत्' इति प्रत्याकलितस्वदुर्नयः पिण्डीषण्डं विविक्तमेतदासाद्य पर्याप्तमश्रु मुञ्चामि' इति ।

(२५) श्रुत्वा चैतदनुकम्पमानोऽब्रुवम्–'भद्र क्षमस्व। कञ्चित्कालमत्रैव निवस। निजेन द्युम्नेनासावेव वेश्या यथा त्वां योजयिष्यति तथा यतिष्ये। सन्त्युपायास्तादृशाः' इत्याश्वास्य तमनूत्थितोऽहम्। नगरमाविशन्नेव चोपलभ्य लोकवादाल्लुब्धसमृद्धपूर्णं पुरमित्यर्थानां नश्वरत्वं च प्रदर्श्य प्रकृतिस्थानमून्विधास्यन्कर्णीसुतप्रहिते पथि मतिमकरवम्।

---

स्वस्य दुर्नयो येन सः। पिण्डीषण्डम्–अशोकसमूहम्। विविक्तं–विजनम्। आसाद्य–प्राप्य। पर्याप्तं–प्रचुरम्। अश्रु–नयनजलम्। मुञ्चामि–त्यजामि।

(२५) अनुकम्पमानो–दयमानः। अहमपहारवर्मेति शेषः। क्षमस्व–सहस्व अत्रैव–जैनायतने एव। निवस–तिष्ठ। द्युम्नेन–धनेन। 'हिरण्यं द्रविणं द्युम्नमि'-त्यमरः। असौ–काममञ्जरी। यथा येन प्रकारेण। योजयिष्यति–युक्तं करिष्यति धनेनेति शेषः। तथा–तेन प्रकारेण। यतिष्ये–चेष्टिष्ये। उपायाः–साधनानि। आश्वास्य–सान्त्वयित्वा। तं–विरूपकं अनु–पश्चात्। अहमपहारवर्मा। आविशन्–प्रविशन्। उपलभ्य–ज्ञात्वा। लोकवादात्–जनमुखात्। लुब्धेति–लुब्धैर्धूर्तैः समृद्धैः धनशालिभिः पूर्णं व्याप्तम्। पुरं–नगरम्। इत्यन्तं उपलभ्येत्यस्य कर्म। नश्वरत्वं–क्षणिकत्वम्। प्रदर्श्य–बोधयित्वा। अमून्–पौरान्। प्रकृतिस्थान् स्वभावस्थान् सन्मार्गवर्तिन इत्यर्थः। विधास्यन्–करिष्यन्। कर्णीसुतेति–कर्णीसुतः स्तेयशास्त्रप्रवर्तकस्तेन प्रहिते प्रदर्शिते। पथि–मार्गे चौरशास्त्रे इत्यर्थः।

---

हूँ। इस प्रकार अपने अनाचारको सोचकरके मैं इस एकान्त अशोकवनमें आ करके पर्याप्त आँसू बहाता हूं।

(२५) उसका वृत्तान्त सुन करके उसपर अनुकम्पा करते हुए मैंने कहा—'भद्र, क्षमा करो और कुछ समय यहीं रहो। तबतक मैं ऐसा उपाय करूँगा कि, जिससे वही वेश्या अपना सब धन तुम्हें लौटा दे। ऐसे बहुतेरे उपाय हैं।' इस प्रकार उसे ढाढ़स बँधा करके मैं उठ पड़ा। नगरमें घुसते ही मैंने सुना कि, वह नगर, लोभियोंके विपुल धनसे भरा है। बस, मैंने धनकी नश्वरता दिखा करके उन धनलोलुपोंको प्रकृतिस्थ करनेके लिए चौर्यशास्त्रके प्रवर्तक कर्णीसुतके विहित पथपर चलनेका संकल्प किया।

(२६) अनुप्रविश्य च द्यूतसभामक्षधूर्तैःसमगंसि। तेषां च पञ्चविंशति-प्रकारासु सर्वासु द्यूताश्रयासु कलासु कौशलमक्षभूमिहस्तादिषु चात्यन्त-दुरुपलक्ष्याणि कूटकर्माणि तन्मूलानि सावलेपान्यधिक्षेपवचनानि जीवि-तनिरपेक्षाणि संरम्भविचेष्टितानि सभिकप्रत्ययव्यवहारान्न्यायबलप्रताप-प्रायानङ्गीकृतार्थसाधनक्षमान्बलिषु सान्त्वनानि दुर्बलेषु भर्त्सितानि पक्ष-रचनानैपुणमुच्चावचानि प्रलोभनानि ग्लहप्रभेदवर्णनानि द्रव्यसंविभागौ

---

( २६ ) द्यूतसभाम्–अक्षक्रीडासमाजम् । अक्षधूर्तैः–पाशक्रीडानिपुणैः । समगंसि–तैः सह सम्मिलितोऽभवम् । गम् धातोरात्मनेपदे लुङि उत्तमपुरुषैकवचने रूपम् । 'समो गम्यृच्छिभ्याम्' इत्यनेनात्मनेपदम् । तेषामक्षधूर्तानाम् । द्यूताश्रयासु–द्यूतक्रीडासम्बन्धिनीषु । कलासु–शिक्षासु । अक्षेत्यादि–अक्षाः पाशकाः, भूमि स्तत्पातनस्थानं, हस्तस्तत्पातनयोग्यः करस्तदादिषु । अक्षभ्रमिहस्तेति पाठे अक्षाणां पाशकानां भ्रमिप्रघूर्णनेषु ये हस्तादयोऽपेक्ष्यन्ते तेषु । अत्यन्तेति अत्यन्तं नितरां दुरुपलक्ष्याणि दुर्ज्ञेयानि दुःखेनापि ज्ञातुमशक्यानीत्यर्थः । कूटकर्माणि–कपटव्यवहारान् । तन्मूलानि–कूटकर्ममूलानि । तन्निमित्तकानि वा । सावलेपानि–सगर्वाणि । अधिक्षेपवचनानि–तिरस्कारसूचकानि वाक्यानि । जीवितनिरपेक्षाणि प्राणधारणेऽपि आसक्तिशून्यानि । संरम्भविचेष्टितानि–कोपकार्याणि । सभिके-त्यादि–सभिकस्य द्यूतकारकस्य प्रत्ययो विश्वासस्तदुचितव्यवहारान् तद्योग्यानुष्ठा-नानि । कीदृशा व्यवहारा इति तद्विशिनष्टि–न्यायेति । न्यायो युक्तिः, बलं सामर्थ्यं प्रतापः प्रभावः प्रायो बहुलो येषु तान् । पुनः किम्भूतान्–अङ्गीकृतस्य कर्त्तुं प्रतिज्ञातस्यार्थस्य प्रयोजनस्य साधने सिद्धौ क्षमान् योग्यान् । बलिषु–बलवत्सु । सान्त्वनानि–सामप्रयोगान् । भर्त्सितानि–भीतिजनकवाक्यानि । पक्षरचनायां जयवतां पुरुषाणामात्मपक्षीयकरणे । नैपुणं–पाटवम् । उच्चावचानि–नानाविधानि । प्रलोभनानि–लोभोत्पादकानि । ग्लहेति–ग्लहस्य पणस्य ये प्रभेदा विशेषास्तेषां

---

( २६ ) बस, सर्वप्रथम मैं जुआड़ियोंकी मण्डलीमें घुसा और ,कुशल जुआड़ियोंमें घुल-मिल गया। उन लोगोंकी पच्चीसों प्रकारकी सभी द्यूतकलाकी कुशलता, गोटियोंको रखनेकी जगह, अतिशय दुष्प्रेक्ष्य हाथकी सफाई, चालबाजियाँ और उनसे युक्त गर्व तथा आक्षेपभरे वाक्य, जीवनकी भी परवा न करके साहसके काम कर गुजरना, जुआ खेलानेवाले ( नालिया- ) की जानकारी रहते हुए न्यायालयमें जा करके जीतने तथा प्रभावयुक्त स्वार्थसाधनके उपायोंको जानना, बलवानोंके साथ सान्त्वना देते हुए, दुर्बलोंको डाँट-फटकार बताना, ऊँची-नीची बातें करके अपना पक्ष प्रबल कर लेना, प्रलोभन देना,

दयमन्तरान्तराश्लीलप्रायान्कलकलानित्येतानि चान्यानि चानुभवन्न तृप्तिमध्यगच्छम् ।

( २७ ) अहसं च किंचित्प्रमाददत्तशारे क्वचित्कितवे । प्रतिकितवस्तु निदहन्निव क्रोधताम्रया दृशा मामभिवीक्ष्य 'शिक्षयसि रे द्यूतवर्त्म हासव्याजेन । आस्तामयमशिक्षितो वराकः । त्वयैव तावद्विचक्षणेन देविष्यामि' इति द्यूताध्यक्षानुमत्या व्यत्यषजत् । मया जितश्चासौ षोडश-

---

वर्णनानि निरूपणानि । द्रव्येति—द्रव्यस्य द्यूतलब्धधनस्य संविभागे वण्टने-औदार्यं महत्त्वं स्वकीयांशत्यागादिवेति भावः । अन्तरान्तरा मध्ये मध्ये । कलकलान् कोलाहलान् । इत्येतानि—यावन्ति उक्तानि—अन्यानि—यान्यनुक्तानि । अनुभवन्—दृष्ट्वा श्रुत्वा च । तृप्तिं सन्तोषम् । नाध्यगच्छम् न प्राप्तवान् । द्यूतक्रीडां विना केवलदर्शनेन तृप्तिर्नोत्पद्यत इति भावः ।

( २७ ) किञ्चित्—ईषत् । प्रमाददत्तशारे—प्रमादेन अनवधानतया दत्तः स्थापितः शारः शारिका गुटिकेति यावद्, येन तथाविधे । क्वचित्—कस्मिंश्चित् । कितवे—धूर्ते द्यूतकरे । प्रतिकितवः—प्रतिकूलद्यूतकरः । निर्दहन्निव भस्मीकुर्वन्निव । क्रोधताम्रया—रोषारुणया । दृशा—नेत्रेण द्यूतवर्त्म—द्यूतमार्गम् । हासव्याजेन—हास्यच्छलेन । आस्तां तिष्ठतु । अशिक्षितः अपटुः । वराकः शोच्यः । विचक्षणेन पण्डितेन । देविष्यामि—क्रीडिष्यामि इति—एवमभिधाय । द्यूताध्यक्षानुमत्या सभिकसम्मतिपूर्वकम् । व्यत्यषजत्—द्यूतक्रीडायां संलग्नोऽभवत् । वि-अतिपूर्वकस्य षस्ज सङ्ग इत्यस्य धातोर्लङि रूपम् । असौ प्रतिकितवः । दीनाराणां स्वर्णमुद्राणाम् ।

---

दाँवके विभिन्न भेद बताना, जुएमें प्राप्त द्रव्यका बँटवारा करना, बीच-बीचमें गाली-गलौजका शोरगुल आदि तरह-तरहकी बातोंका सतत अनुभव करते हुए मैं तृप्त नहीं होने पाया ।

( २७ ) एक बार एक धूर्तके प्रमादवश गोटी दे देनेपर मुझे हँसी आ गयी तब उसका प्रतिपक्षी धूर्त क्रोधसे अपनी आँखें लाल करके मेरी ओर इस तरह ताकने लगा जैसे मुझे जलाकर भस्म ही कर देगा, कहने लगा 'अरे छोकरे ! हँसीके बहाने मुझे जुआ खेलना सिखाता है अच्छा, यह अशिक्षित खेलाड़ी अलग बैठे । तू जो अपनेको कुशल खेलाड़ी मानता है तो, आ, मैं तेरे ही साथ खेलूँगा ।' इसपर द्यूताध्यक्षकी भी अनुमति मिल गयी और वह मेरे साथ खेलने लगा । मैंने बातकी बातमें इसकी सोलह हजार

सहस्राणि दीनाराणाम्। तदर्धं सभिकाय सभ्येभ्यश्च दत्त्वार्धं स्वीकृत्योदतिष्ठम्।

( २८ ) उदतिष्ठंश्च तत्र गतानां हर्षगर्भाः प्रशंसालापाः। प्रार्थयमानसभिकानुरोधाच्च तदगारेऽत्युदारमभ्यवहारविधिमकरवम्। यन्मूलश्च मे दुरोदरावतारः स मे विमर्दको नाम विश्वास्यतरं द्वितीयं हृदयमासीत्। तन्मुखेन च सारतः कर्मतः शीलतश्च सकलमेव नगरमवधार्य धूर्जटिकण्ठकल्माषकालतमे तमसि नीलनिवसनार्धोरुकपरिहितो बद्ध-

---

जित इत्यत्र जिधातोरप्रधाने कर्मणि असाविरयत्र निष्ठाप्रत्ययः। तदर्धंविजितधनस्यार्धम्। स्वीकृत्य स्वयं गृहीत्वा। उदतिष्ठम् उत्थितोऽभवम्।

( २८ ) तत्र गतानां–द्यूतसमाजस्थितानाम्। हर्षगर्भाःआनन्दमिश्राः। प्रशंसालापाः प्रशंसासूचकवाक्यानि। प्रार्थयमानेति–प्रार्थयमानस्य मम गृहे त्वया भोक्तव्यमिति प्रार्थनां कुर्वतः सभिकस्य द्यूताध्यक्षस्यानुरोधात् प्रार्थनानुसारेण। तदगारेऽभिकगृहे। अत्युदारमत्युत्कृष्टम्। अभ्यवहारविधिं भोजनव्यापारम्। यन्मूलः यन्निमित्तकः। दुरोदरावतारः–द्यूतक्रीडाप्रवेशः। विश्वास्यतरमत्यन्तविश्वासभाजनम्। द्वितीयं हृदयं परममित्रम्। तन्मुखेन विमर्दकसाहाय्येन। सारतो बलात्। कर्मतोऽनुष्ठानात्। शीलतः स्वभावाच्च। अवधार्यके कीदृक् सारवन्तः कर्मवन्तः स्वभाववन्तश्चेति निश्चित्य। धूर्जटीति-धूर्जटेर्महादेवस्य कण्ठे गले यत्कल्माषं कालिमा तद्वत् कालतमेऽतिकृष्णवर्णे। अतिघोरे इति भावः। तमस्यन्धकारे। नीलेति–नीलं कृष्णवर्णं यन्निवसनं वस्त्रं तस्य यदर्धोरुकमर्धोरु व्यापि अवगुण्ठनं तत्परिहितमाच्छादितं येन सः। नीलवस्त्राच्छादितशरीरः। निष्ठान्तस्य

---

अशर्फियाँ जीत लीं। उनमेंसे आधी द्यूताध्यक्षको और आधी की आधी सभ्योंको दे करके आधी अशर्फियां अंटी में कीं और उठ खड़ा हुआ।

( २८ ) मेरे उठने के साथ ही वहां पर विद्यमान सब लोगों के सहर्ष प्रशंसाभरे वचनों से कोलाहल-सा मच गया। द्यूताध्यक्ष के पुनः पुनः प्रार्थना करने पर मैंने उसी के घर जा करके अतिशय उदारतापूर्वक भोजन किया। जिसकी बदौलत मैं इस द्यूतकर्म में प्रवृत्त हुआ था, वह 'विमर्दक' नामक मेरा अति विश्वसनीय दूसरे हृदय के समान अभिन्न मित्र था। उसीकी जबानी मैंने अपने बल, कर्म और शीलसे सारे शहरको अपनी अच्छाईका विश्वास दिला दिया। तदनन्तर जब श्रीशिवजीके कण्ठकी तरह काला अन्धकार छा गया, तब नीले रंगका अर्धोरुक ( लबादा )

तीक्ष्णकौक्षेयकः फणिमुखकाकलीसंदंशकपुरुषशीर्षकयोगचूर्णयोगवर्तिकामानसूत्रकर्कटकरज्जुदीपभाजनभ्रमरकरण्डकप्रभृत्यनेकोपकरणयुक्तो गत्वा कस्यचिल्लुब्धेश्वरस्य गृहे संधिं छित्त्वा पटभाससूक्ष्मच्छिद्रालक्षितान्तर्गृहप्रवृत्तिरव्यथो निजगृहमिवानुप्रविश्य नीवीं सारमहतीमादाय निरगाम् ।

( २९ ) नीलनीरदनिकरपीवरतमोनिबिडितायां राजवीथ्यां झटिति

---

परनिपातः । कौक्षेयकः खड्गः । फणिमुखेति–अग्रे वक्ष्यमाणानि सर्वाण्येव चौर्यसाधनान्युपकरणानि । फणिमुखं फणिनो मुखमिव मुखं यस्य तत् । सुरङ्गाखननसाधनमस्त्रविशेषः । काकली काकचञ्च्वाकारयन्त्रविशेषः कर्त्तरीति प्रसिद्धः । सन्दंशकः दृढनिखातकीलोत्पाटनार्थं यन्त्रविशेषः सण्डांसीति भाषा । पुरुषशीर्षकं पुरुषमस्तकाकारकाष्ठमयशिरः परीक्षार्थं सुरङ्गायां प्रथमप्रवेशनार्थम् । योगचूर्णं निध्यंजनौषधिमूलादिचूर्णं गृहस्थानां गभीरनिद्रावेशसाधनम् । योगवर्तिका-अग्निं विना आलोकसाधनम् । मानसूत्र प्रमाणरज्जुः, कर्कटकः कुलीराकृतियन्त्रविशेषः । रज्जुः सौधाग्रारोहणार्थम् । दीपभाजनमालोकाधारः, भ्रमरकरण्डकं दीपनिर्वापणार्थं शलभभाण्डम्–इत्यादिभिरनेकैरुपकरणैर्युक्तः, अहमिति शेषः । लुब्धेश्वरस्य लुब्धधनिकस्य धूर्तप्रधानस्य वा । सन्धिं इष्टकासंयोगम् । पटभासेति—पटभासो गवाक्षजालं तस्य सूक्ष्मेण छिद्रेण विवरेण आलक्षिता दृष्टा अन्तर्गृहे गृहमध्ये स्थितानां प्रवृत्तिर्वृत्तान्तो येनासौ । अव्यथः अभ्रान्तः । नीवीं मूलधनम् । सारमहतीं सारेण श्रेष्ठरत्नादिना महतीं महामूल्यवतीम् । निरगाम् निरगच्छम् ।

( २९ ) नीलेति–नीलाः कृष्णा ये नीरदा मेघास्तेषां निकरः समूहस्तद्वत्

---

पहना । कमरमें अतितीक्ष्ण तलवार बांधी । सेंध लगानेवाली, शबरी-कैंची, सँड़सी, काष्ठनिर्मित पुरुषका मस्तक, योगवर्तिका, (जिसके जलानेपर सर्प दीख जाते हैं) नापनेका फीता यन्त्रसाधन, रस्सी, दीपपात्र, भ्रमरकरण्डक ( दीपक बुझानेवाले भौंरोंसे भरी पेटी ) आदि अनेक प्रकारकी सामग्रियाँ ले करके गया और एक लोभी धनीके घरमें सेंध लगायी वहाँ पहले मैंने झरोकेके सूक्ष्म छिद्रसे घरकी सारी स्थिति भलीभांति देख ली और तब विना हिचकके अपने घरके समान घुस गया तथा एक बहुमूल्य करधनी चुरा करके निकल आया ।

( २९ ) बाहर काले बादलों के कारण अतिशय घने अन्धकारयुक्त राजमार्गमें एकाएक

शतह्रदासंपातमिव क्षणमालोकमलक्षयम् । अथासौ नगरदेवतेव नगरमोषरोषिता निःसंबाधवेलायां निःसृता संनिकृष्टा काचिदुन्मिषद्भूषणा युवतिराविरासीत् । 'कासि वासु, क यासि' इति सदयमुक्ता त्रासगद्गदमगादीत्—'आर्य, पुर्यस्यामर्यवर्यः कुबेरदत्तनामा वसति । अस्म्यहं तस्य कन्या । मां जातमात्रां धनमित्रनाम्नेऽत्रत्यायैव कस्मैचिदिभ्यकुमारायान्वजनाद्भार्यां मे पिता । स पुनरस्मिन्नत्युदारतया पित्रोरन्ते वित्तैर्निजैः क्रीत्वेवार्थिवर्गाद्दारिद्र्यं दरिद्रति सत्यथोदारक इति च प्रीतलोकाधिरोपिता-

---

पीवरं सान्द्रं यत्तमोऽन्धकारस्तेन निबिडितायाम् व्याप्तायाम् । राजवीथ्यां राजमार्गे । शतह्रदासम्पातं विद्युत्स्फुरणम् । क्षणं मुहूर्तं यावत् । आलोकं ज्योतिः । असौ—अग्रतो निर्दिष्टा । नगरदेवतेव—नगराधिष्ठात्री देवीव । कीदृशी सेति विशिनष्टि नगरमोषेति—नगरस्य पुरस्य मोषेण अपहरणेन रोषिता कोपिता । नगरस्य यत्सारधनं मयापहृतं तेन नगराधिष्ठात्र्याः कोपः सञ्जात इति भावः । निःसम्बाधवेलायां जनसंकटरहितसमये । संकटं नातु संबाध इति कोषः । निःसृता गृहान्निर्गता । सन्निकृष्टा—समीपस्थिता । उन्मिषद्भूषणा दीप्यमानालङ्कारा । उन्मिषन्ति भूषणानि यस्याः सेति विग्रहः । आविरासीत्—प्रकटीबभूव । उक्ता पृष्टा मयेति शेषः । त्रासगद्गदं भीतिभिन्नस्वरम् । पुरि नगरे । अर्यवर्यः वैश्यश्रेष्ठः । अर्यः स्वामिवैश्ययोरिति निपातः । जातमात्रां जन्मसमये एव । अत्रत्याय—एतद्देशोत्पन्नाय । इभ्यकुमाराय—धनिकपुत्राय भार्याम् अन्वजानाद्—पत्नीत्वेन दातुं प्रतिज्ञातवान् । सः मम पिता । अस्मिन् धनमित्रे । अत्युदारतया—दानशौण्डतया । पित्रोर्मातापित्रोः । अन्ते अवसाने मरणानन्तरमित्यर्थः । निजैः स्वकीयैः । वित्तैर्धनैः । अर्थिवर्गाद् याचकसमूहात् । दारिद्र्यं दरिद्रताम् । क्रीत्वेव गृहीत्वेव ।

---

बिजलीकी चमक जैसी चमकती ज्योतिको मैंने देखा । इसके बाद वह, नगरमें चोरी होनेसे रुष्ट नगरदेवीकी नाईं, इस सुनसानके समय घरसे निकल करके, जब मेरे समीप आयी, तब मैंने देखा कि, वह एक युवती स्त्री है और उसके शरीरपर विविध आभूषण आभूषित हो रहे हैं । मैंने सदय बनकरके उससे पूछा—'देवि ! तुम कौन हो ? कहाँ जा रही हो ?' अब जैसे मारे भयके गद्गदवाणीमें उसने कहा—'आर्य ! इस पुरीमें वैश्यवर्य कुबेरदत्त रहते हैं । मैं उनकी पुत्री हूँ । मैं जन्मी, तैसे ही मेरे पिताने यहींके निवासी एक धनी वैश्यपुत्रके साथ मेरा विवाह करनेका संकल्प कर लिया था । माता-पिताके गुजर जानेपर उस वैश्यकुमारने अपना सब धन याचकोंको दे करके उनकी दरिद्रता मोल ले

परश्लाघ्यनामनि वरयत्येव तस्मिन्मां तरुणीभूतामधन इत्यदत्त्वार्थपतिनाम्ने कस्मैचिदितरस्मै यथार्थनाम्ने सार्थवाहाय दित्सति मे पिता। तदमङ्गलमद्य किल प्रभाते भावीति ज्ञात्वा प्रागेव प्रियतमदत्तसंकेता वञ्चितस्वजना निर्गत्य बाल्याभ्यस्तेन वर्त्मना मन्मथाभिसरा तदगारमभिसरामि तन्मां मुञ्च। गृहाणैतद्भाण्डम्' इत्युन्मुच्य मह्यमर्पितवती।

( ३० ) दयमानश्चाहमब्रवम्—'एहि साध्वि, त्वां नयेयं त्वत्प्रियावसथम्' इति त्रिचतुराणि पदान्युदचलम्। आपतच्च दीपिकालोकपरिलुप्य-

---

दरिद्रति सति दारिद्र्यमनुभवति सति। अतिदातृत्वेनार्थिभ्यः स्वधनं वितीर्य स्वयमेव दरिद्रोऽभवदिति भावः। प्रीतेति—प्रीतेन सन्तुष्टेन लोकेन अनेनाधिरोपितं वृत्तम् उदारक इत्यपरमन्यत् श्लाघ्यं प्रशंसनीयं—नाम अभिधानं यस्य तस्मिन्। वरयति प्रार्थयति। तस्मिन् धनमित्रे। अधनो निःस्व इति कारणात्। इतरस्मै अन्यस्मै। यथार्थनाम्ने वस्तुतो धनिकायेति भावः। सार्थवाहाय वणिजे। दित्सति दातुमभिलषति। तदमङ्गलम्—अर्थपतये मद्दानरूपमशुभं कर्म। भावि—भविष्यति। प्रागेव—दानात्पूर्वमेव। प्रियतमेन धनमित्रेण दत्तः कृतः संकेतो यस्यै सा। वञ्चितः प्रतारितः स्वजन आत्मीयवर्गो यया सा। निर्गत्य स्वगृहादिति शेषः। बाल्याभ्यस्तेन—परिचितेन। मन्मथाभिसरा—मदनसहाया। तदगारं धनमित्रगृहम्। अभिसरामि गच्छामि। भाण्डमलङ्कारजातम्। उन्मुच्य स्वदेहादुत्तार्य।

( ३० ) दयमानः कृपायुक्तः। नयेयं प्रापयेयम्। त्वत्प्रियावसथं त्वद्दयितगृहम्। त्रिचतुराणि—त्रीणि चत्वारि वा। उदचलं चलितवान्। आपतत्—एतदन्तरे समा-

---

ली और गरीबीके दिन बिता रहा है। इन्हीं लोगोंने उसको 'उदारक' यह उपाधि दे दी है। वह श्लाघनीय नामवाला वैश्य मुझ तरुणी के साथ विवाह करना चाहता है। 'किन्तु मेरे पिता धनहीन समझ करके उसके साथ मेरा विवाह न करके अर्थपति नामक किसी धनी और विदेशी वैश्यके साथ मेरा विवाह करना चाहते। यह अमंगल सवेरे ही होनेवाला है, यह पता पा करके मैं अपने प्रियतमके पूर्व संकेतानुसार, अपने कुटुम्बवालोंसे आंख बचाकरके, अभी ही निकल पड़ी और बाल्यकालसे अभ्यस्त मार्गसे उसके घर जा रही हूँ। इसलिए आप मुझे छोड़ दें और मेरे पास जो भाण्ड है, उसे आप ले लें।' ऐसा कह करके उसने मुझे वह भाण्ड अर्पण कर दिया।

( ३० ) अब मुझे उसपर दया आ गयी और मैंने कहा—'हे साध्वि! आओ, मैं तुम्हें तुम्हारे प्रियतमके घर पहुँचा दूँ।' यों कह करके मैं तीन-चार कदम चला होगा कि,

मानतिमिरभारं यष्टिकृपाणपाणि नागरिकबलमनल्पम् । दृष्ट्वैव प्रवेपमानां कन्यकामवदम्—'भद्रे, मा भैषीः । अस्त्ययमसिद्धितीयो मे बाहुः । अपि तु मृदुरयमुपायस्त्वदपेक्षया चिन्तितः । शयेऽहं भावितविषवेगविक्रियः । त्वयाप्यमी वाच्याः 'निशि वयमिमां पुरीं प्रविष्टाः । दष्टश्च ममैष नायको दर्वीकरेणामुष्मिन्सभागृहकोणे । यदि वः कश्चिन्मन्त्रवित्कृपालुः स एनमुज्जीवयन्मम प्राणानाहरेदनाथायाः' इति ।

( ३१ ) सापि बाला गत्यन्तराभावाद्भयगद्गदस्वरा बाष्पदुर्दिनाक्षी बद्धवेपथुः कथंकथमपि गत्वा मदुक्तमन्वतिष्ठत् । अशयिषि चाहं भावि-

---

गच्छत् । नागरिकबलमित्यनेन सम्बध्यते । दीपिकेति दीपिकायाः हस्तदीपस्य 'मशाल' इति भाषाप्रसिद्धस्यालोकेन प्रकाशेन परिलुप्यमानो नाश्यमानस्तिमिरभारोऽन्धकारसमूहो यत्रेति क्रियाविशेषणम् । यष्टिर्दण्डः कृपाणः खड्गस्तौ पाणौ यस्य तत् । नागरिकबलस्य विशेषणमेतत् । बलं सैन्यम् । अनल्पं बहु । प्रवेपमानां भयेन कम्पमानाम् । असिद्वितीयः खड्गसहायः । असिर्द्वितीयो यस्येति विग्रहः । अपि तु–किन्तु । मृदुः–कोमलः । त्वदपेक्षया भवत्या अनुरोधेन । चिन्तितः स्थिरीकृतः । शये–सुप्तो भवामि । भावितेति–भाविता प्रकटिता विषस्य वेगेन विक्रिया विकारो येन सः । विषमूर्च्छितमिवात्मानं दर्शयामीति भावः । अमी उपस्थिताः जनाः । वाच्याः कथनीयाः । नायको वल्लभः । दर्वीकरेण सर्पेण वः युष्माकं मध्ये । मन्त्रवित् मन्त्रौषधिज्ञः । आहरेद् उद्धरेत् ।

( ३१ ) गत्यन्तराभावात् उपायान्तरासत्त्वात् । बाष्पदुर्दिनाक्षी-अश्रुपूर्णनयना । बद्धवेपथुः सञ्जातकम्पा अन्वतिष्ठत्–यथा मयोक्तं तथैव कृतवती ।

---

इतनेमें दीपकके प्रकाशसे अन्धकार राशिको दूर करता हुआ हाथमें लाठी और तलवार लिये नागरिकोंका एक बड़ा झुण्ड आ पहुँचा । उसे देखते ही मारे भयके कांपनेवाली उस कन्यासे मैंने कहा—'मत डरो । मेरे भी भुजायें हैं और भुजाओंमें तलवार है । तथा तुम्हारे अनुरोधसे मैंने एक उपाय सोच लिया है । मैं बनावटी विषवेगसे व्याकुल हो करके यहां लेट जाता हूँ । ये आयें तो कहना कि, 'हम परदेशी हैं और इसी रात इस नगरीमें आये हैं । इस सभागृहके कोनेमें मेरे पतिको सांपने काट लिया है । आप लोगोंमेंसे कोई दयालु यदि मंत्र जानता हो तो, इसे जीवित करके मुझ अनाथिनीके प्राणोंको बचा ले ।

( ३१ ) और कोई उपाय न देखकर उस तरुणीने भयसे गद्गदस्वरमें आंसू बहाती हुई, कॉंपती-कॉंपती मेरे कथनका अनुसरण किया । अब मैं बनावटी विषके विकारसे

तविषविक्रियः । तेषु कश्चिन्नरेन्द्राभिमानी मां निर्वर्ण्य मुद्रातन्त्रमन्त्रध्यानादिभिश्चोपक्रम्याकृतार्थः, 'गत एवायं कालदष्टः । तथा हि स्तब्धश्यावमङ्गम्, रुद्धा दृष्टिः, शान्त एवोष्मा । शुचालं वासु, श्वोऽग्निसात्करिष्यामः । कोऽतिवर्तते दैवम्' इति सहेतरैः प्रायात् ।

( ३२ ) उत्थितश्चाहमुदारकाय तां नीत्वाब्रवम्—'अहमस्मि कोऽपि तस्करः । त्वद्गतेनैव चेतसा सहायभूतेन त्वामिमामभिसरन्तीमन्तरोप·

---

अशयिषि शयितोऽभवम् । तेषु नागरिकेषु । नरेन्द्राभिमानी—विषवैद्यम्मन्यः । नरेन्द्रो वार्त्तिके राज्ञि विषवैद्येऽपीति कोशः । मां शयितमपहारवर्माणम् । निर्वर्ण्य—सावधानं निरीक्ष्य । मुद्रेति—मुद्रातन्त्रादिप्रयोगैः । उपक्रम्य चिकित्सामारभ्य । अकृतार्थः अकृतकार्यः । विषापनयनं कर्त्तुमपारयन्नित्यर्थः । गतः मृतः । कालदष्टः कालेन मृत्युना दष्टो भक्षितः । मरणचिह्नानि दर्शयति तथाहीति-स्तब्धं निश्चलं श्यावं धूम्रवर्णमङ्गं शरीरम् । दृष्टिर्दर्शनशक्तिः रुद्धा नष्टा । उष्मा शरीरतापः । शान्तोऽपगतः । शुचा शोकेनालं प्रयोजनन्नास्ति । श्वः आगामिदिने । अग्निसात्करिष्यामः धक्ष्यामः । अतिवर्त्तते—अतिक्रामति । इति इत्युक्त्वा । इतरैरन्यैः । प्रायादगच्छत् ।

( ३२ ) उदारकाय तां नीत्वा—तां कन्यामुदारकसमीपं प्रापय्य । त्वद्गतेन त्वत्पक्षपातिना । चेतसा—हृदयेन । सहायभूतेन सहायकेन । त्वद्धृदयमेव सहायीकृत्येत्यर्थः । त्वां भवत्समीपम् अभिसरन्तीम् आगच्छन्तीम् इमां भवत्पत्नीम् । अन्तरा मार्गमध्ये । उपलभ्य प्राप्य । कृपया दयया । अनैषम्—आनीतवानस्मि । इति इत्थमुक्त्वा । अंशुपटलेति अंशुपटलेन किरणसमूहेन पाटितं ना·

---

व्याकुल होकर लोट गया । तदनन्तर उनमेंसे अपनेको वैद्य माननेवाले एक पुरुषने मुझे भली भाँति देखा मुद्रा, तन्त्र, मन्त्र तथा ध्यान आदिके द्वारा अनेक उपाय करके भी असमर्थ रहा, तब उसने कहा—'इसे सर्पने नहीं, बल्कि कालने काटा है, इसलिए अब यह चल बसा । इसके सब अङ्ग शिथिल और श्याम हो गये हैं । आँखें पथरा गयी हैं और शरीर ठण्डा पड़ गया है । देवि ! शोक करना व्यर्थ है । सबेरे हम लोग आकर इसे जला देंगे । विधिके विधानको भला कौन मेट सकता है ?' यों कहकर वह अपने साथियोंके साथ चला गया । तब मैं भी उठा और उस कन्याको उदारकके पास ले जाकर कहा—'आर्य ! मैं एक चोर हूँ । तुम्हारेमें इस कन्याका मन लगा हुआ था, उसी मनका सहायक

त्सभ्य कृपया त्वत्समीपमनैषम्। भूषणमिदमस्याः' इत्यंशुपटलपाटितध्वान्तजालं तदप्यर्पितवान्। उदारकस्तु तदादाय सलज्जं च सहर्षं च ससंभ्रमं च मामभाषत—'आर्य, त्वयैवेयमस्यां निशि प्रिया मे दत्ता। वाक्पुनर्ममापहृता। तथा हि न जाने वक्तुं त्वत्कर्मैतदद्भुतमिति। ननु ते शीलमद्भुतवत्प्रतिभाति। नैवमन्येनापि कृतपूर्वमिति प्रतिनियतैव वस्तुशक्तिः। न हि त्वय्यन्यदीया लोभादयः। त्वयाद्य साधुतोन्मीलितेति

शितं ध्वान्तजालमन्धकारसमूहो येन तत्। तदपि–भूषणमपि। तदादाय–भूषणं गृहीत्वा। सलज्जं सव्रीडम्। सहर्षं सानन्दम्। ससम्भ्रमं साश्चर्यम्। सलज्जमित्यत्र स्वरहस्यज्ञानं लज्जायाः, सहर्षमित्यत्र अद्भुतोपायेन प्रियाप्राप्तिर्हर्षस्य ससम्भ्रममित्यत्र च तस्करस्यालौकिककर्मदर्शनं सम्भ्रमस्य कारणम्। एतानि च अभाषतेति क्रियाविशेषणानि। मे मह्यम्। अपहृता गृहीता। अत्र प्रियाविनिमयेन वागपहरणात् परिवृत्तिरलंकारः। परिवृत्तिर्विनिमयो न्यूनाभ्यधिकयोर्मिथ इति लक्षणात्। मम वचनसामर्थ्यं नास्ति इति यदुक्तं तदेव विशदयति–तथाहीत्यादिना। एतत्त्वत् कर्म–प्रियादानरूपमद्भुतमाश्चर्यजनकमिति वक्तुं न जाने वचनसामर्थ्यं मम नास्ति। तादृशशक्तेरभावात्। न जाने इत्यनेनानन्तरोक्तानां सर्वेषामित्यन्तवाक्यानामन्वयः। ते तव स्वशीलं स्वभावः चोरस्यापि भूषादिसमर्पणरूपः अद्भुतमिव प्रतिभाति। एवमीदृशं कर्म अन्येनापि भवद्व्यतिरिक्तेनापि न कृतपूर्वं पूर्वं नाचरितमित्यपि वक्तुं न जाने यतो वस्तुशक्तिः पदार्थस्वभावः प्रतिनियता तत्तद्व्यक्तिनिष्ठैव। एकस्य शक्तिरेकत्रैव तिष्ठति नान्यत्रात एतादृशं कर्म पूर्वमन्येन न कृतमिति वचनस्यावसरोऽपि नास्तीति भावः। अन्यदीया अन्यपुरुषसाधारणाः लोभादयस्त्वयि न सन्ति नोपलभ्यन्ते। अद्य साम्प्रतं साधुता सज्जनता उन्मीलिता प्रकटीकृतेति यत्तत् प्रायो बाहुल्येन त्वत्पु-

बनकर, मार्गमें मिली हुई, इस कन्याको तुम्हारे समीप ले आया हूँ। ये इसके गहने हैं।' ऐसा कहकर अपनी दीप्तिसे अन्धकार राशिको नष्ट करते हुए उन आभूषणोंको उसे दे दिया। उसे लेकर उदारकने लज्जा, हर्ष और घबड़ाहटभरी वाणीमें कहा—'आर्य! तुम्हींने इस रातके समय मेरी प्रियाको मेरे पास पहुँचाया है। तुमने अपने कार्यसे मेरी जबान ही बन्द कर दी है। कुछ सूझता ही नहीं कि, क्या कहकर मैं तुम्हारे इस अद्भुत कार्यकी सराहना करूँ। निःसन्देह तुम्हारा स्वभाव विचित्र है। यह तो निश्चित ही है कि, किसी चोरने कभी ऐसा नहीं किया है। और लोगोंके समान तुम्हारेमें लोभ आदि

वर्द्धक्यमुपलप्स्यते। भवन्तश्च पितृसन्निधौ न सुखमवाप्स्यन्ति' इति। महर्षेराज्ञामधिगम्य ते पितुर्वानप्रस्थाश्रमाधिगमप्रतिषेधाग्रहमत्यजन्। राजवाहनं पुष्पपुरेऽवस्थाप्य तदनुज्ञया सर्वेऽपि परिजनाः स्वानि स्वानि राज्यानि प्रतिपाल्य स्वेच्छया पित्रोः समीपे गतागतमकुर्वन्। एवमवस्थितास्ते राजवाहनप्रमुखाः सर्वेऽपि कुमारा राजवाहनाज्ञया सर्वमपि वसुधावलयं न्यायेन परिपालयन्तः परस्परमैकमत्येन वर्तमानाः पुरंदरप्रभृतिभिरप्यतिदुर्लभानि राज्यसुखान्यन्वभूवन्।

इति श्रीमहामहोपाध्यायकविकुलसार्वभौमनिखिलविद्याकुमुदिनी-<br>शर्वरीश्वरसरस्वतीनिःश्वसितकविदण्डिपण्डितविरचितं<br>दशकुमारचरितं सम्पूर्णम्।

---

वयसि वर्तमाना इति भावः। न सुखमवाप्स्यन्तीत्यस्यायं भावः—पितुः समीपेऽवस्थानेन भवतां स्वाधीनता न भविष्यति। स्वाधीनस्य यथा सुखं न तथा पराधीनस्येति। वानप्रस्थाश्रमाधिगमस्य वानप्रस्थाश्रमग्रहणस्य प्रतिषेधो निषेधस्तस्याग्रहो निर्बन्धस्तम्। गतागतं यातायातम्। वसुधावलयं भूमण्डलम्।

पूर्वबङ्गःकुनयोसिग्रामेऽस्मिन् धानुकाख्यके। कृष्णात्रेयमहावंश-प्रादुर्भूतो द्विजाग्रणीः॥<br>शशिभूषणनामाऽऽस्तातो मे शशिभूषणः। जननी शारदादेवी काश्यपान्वयसम्भवा॥<br>महामहाद्युपाध्यायो द्वितीय इव गौतमः। स वामाचरणन्यायाचार्यवर्यो ममाग्रजः॥<br>ताराचरणनामाहं किङ्करोऽस्मि विपश्चिताम्। व्याख्यां दशकुमारस्य कौतुकेन व्यधामिमाम्॥<br>शाकेऽग्निग्सत्रस्विन्दुमिते मकरसंक्रमे। विश्वेशानुग्रहात्काश्यां समाप्तिमयमागताम्॥

इति श्रीताराचरणभट्टाचार्यकृता बालविबोधिनी टीका समाप्ता।

---

आश्रम सेवन करनेसे न रोका—अपने हठको त्याग दिया। राजवाहनको पुष्पपुरमें राज्यसिंहासनपर बैठाकर वे सब अपने-अपने राज्यका शासन करने लगे। स्वेच्छासे कभी-कभी पिता-माताके दर्शनार्थ आ जाया करते। इस रीति से वे सभी कुमार राज्यवाहनकी आज्ञासे पूरे भूमण्डलका न्यायसे शासन करने लगे। एकमत होकर राज्य करते हुए उन लोगों द्वारा, इन्द्रादि देवोंको जो सुख प्राप्त नहीं होते, वे अति दुर्लभ सुख-भोग भोगे गये।

इस प्रकार पं० श्री केदारनाथशर्मा कृत 'बालक्रीड़ा' हिन्दी टीका समाप्त हुई।